தனி ப்ரதி
விலை ரூ. 4
APRIL 2017

# Samskritasri

A Monthly Journal of
Samskrit Education Society

# संस्कृतश्रीः

# ஸம்ஸ்க்ருதஶ்ரீ:

संस्कृतविद्यासमिति-पत्रिका

ஸம்ஸ்க்ருத கல்விக்
கழகம் மாத இதழ்
212/13-1, செயிண்ட் மேரிஸ் ரோடு
மந்தைவெளி, சென்னை-28

सदा बालरूपापि विघ्नाद्रिहन्त्री
महादन्तिवक्त्रापि पञ्चास्यमान्या ।
विधीन्द्रादिमृग्या गणेशाभिधा मे
विधत्तां श्रियं काऽपिकल्याणमूर्तिः ॥

Mukkuruni Pillaiyar Temple, Chidambaram

✆ 24951402

உ

THE SAMSKRIT EDUCATION SOCIETY (Regd) MADRAS

Old 212/13-1, New No.11, St. Mary's Road, R.A. Puram, Chennai - 600 028.

President : Vaidya Sri S.V. Radhakrishna Sastri

Secretary & Treasurer : Sri G. SITHARAMAN, F.C.A.

Editor and Publisher Samskritasri : S. SRINIVASA SARMA
34, Senthamil Nagar,
Near : Indra Nagar & New Railway Station
Big Kancheepuram - 631 502
Cell No. 07402763830

பாடங்கள் நடத்துபவர்கள் :

| | | | |
|---|---|---|---|
| 1. | ஸ்ரீமதி சாந்தா ஸ்ரீநிவாஸன், | ஆழ்வார்ப்பேட்டை | 24353597 |
| 2. | ஸ்ரீமதி மாலதீ பாலசுப்ரமண்யம், | மேடவாக்கம் | 9884158110 |
| 3. | ஸ்ரீமதி சாந்தி அசோக் | மந்தைவெளி | 24951402 |
| 4. | ஸ்ரீமதி கௌரீ கருணாகரன், | மைலாப்பூர் | 24320544 |
| 5. | ஸ்ரீமதி ரமாசுந்தரராஜன், | சென்னை-95 | 65687635 |
| 6. | ஸ்ரீமதீ பார்வதீ ராமசந்திரன் | அண்ணா நகர் | 26215719 |
| 7. | ஸ்ரீ R. முத்து கிருஷ்ணன் | கொரட்டூர் | 26872430 |
| 8. | ஸ்ரீ S. ரங்கநாத சர்மா, | சேலையூர் | 22291720 |
| 9. | ஸ்ரீமதி புவனேச்வரீ | ராஜகீழ்பாக்கம் | 9841212047 |
| 10. | ஸ்ரீ K. ராஜேச்வரீ | மாடம்பாக்கம் | 9962837319 |
| 11. | ஸ்ரீ S. ஹரிஹரன் | நங்கைநல்லூர் | 9841403859 |
| 12. | ஸ்ரீ S. அனந்தன் | மதுராந்தகம் | 9894709418 |
| 13. | ஸ்ரீ P.R. சுப்ரமண்யம் | K.K. நகர் | 23640864 |
| 14. | ஸ்ரீ N. ஜானகீ ராமசாஸ்த்ரீ | I.T.I. கிண்டி | 24953144 |
| 15. | ஸ்ரீ R. ஸ்ரீநிவாஸகோபாலாசார்ய | ஸ்ரீரங்கம் | 2430632 |
| 16. | ஸ்ரீமதீ ராஜம் சுந்தர் | திருநெல்வேலி | 9488326850 |
| 17. | ஸ்ரீ T.V. ஸ்ரீநிவாஸ தாதாசார்ய | காஞ்சீபுரம் | 27269153 |
| 18. | ஸ்ரீ P.D. ஸ்ரீநிவாஸன், | திருநின்றவூர் | 9445703470 |
| 19. | ஸ்ரீ R. ரங்கநாதன் | காஞ்சீபுரம் | 97910 55428 |
| 20. | ஸ்ரீ C.A. ஏகாம்பரம் | கோயம்புத்தூர் | 0422-2233242 |

21. ஸ்ரீமதி டி.வி. ஜயலக்ஷ்மி சர்மா, புன்குன்னம், த்ரிசூர்-680 002, 0487-2382964

22. ஸ்ரீமதி கௌரிவேங்கடராமன், காட்கோபர், மும்பை (E) 09757115154

23. ஸ்ரீ V. கோதண்டராமன், Mrs. கீதா ரேகா, ஆதம்பாக்கம், சென்னை 9444469638

# संस्कृतश्रीः



मालाः : 39 April-2017 पुष्पम् 4

कलि : 5109 दुर्मुखि-मेषमासे 39—4

The Samskrit Education Society Established with the blessings of His Holiness SRI MAHASWAMIGAL of Kanchi Kamakoti Peetam in the year 1957.

**OFFICE:**

Old 212/13-1, St.Mary's Road, Mandaiveli, Chennai - 600 028.

**PRESENT ACTIVITIES**

1. Assisting study of Sanskrit.
2. Publication of books and monthly journal SAMSKRITASRI.





**SUBSCRIPTION RATES**

| | |
|---|---|
| ANNUAL : | Rs. 40/- |
| LIFE SUBSCRIPTION | Rs. 400/- |
| Page Donation | Rs. 200/- |

Subscription and donations may be sent in the form of crossed D.D./Drawn in favour of the Secretary and Treasurer,

The Samskrit Education Society (Regd.) . Old 212/13-1, St.Mary's Road, Mandaiveli, Chennai - 600 028. Ph: 044-2495 14 02
samskritasri@gmail.com

"DD/Cheque should be sent by Speed Post only"

॥ श्रीः ॥



# करुणामृतम् ।

## (गुरुवायुपुरेशवैभवम् - अनुवर्तते)

—तामरश्शेरि शङ्करन् भट्टतिरिकृतम् ।

न प्राप्यसे हृदि गतोऽस्यधिकण्ठलग्न-
रत्नोपमो यतिभिरप्यजितेन्द्रियैस्त्वम् ।
कामाद्यशुद्धहृदयैर्मृतिभीतियुक्ताः
सौख्यं न यान्त्युभयन्त्यनुदयेनविलज्जितास्ते ॥

किं पुण्यपापजनितस्सुखदुःखबन्धः
त्वां जानतो विधिनिषेधगिरां च बाधाः ।
यः प्रत्यहं श्रवणकीतर्तनभावनाद्यैः
संसेवते भवति सोऽपि भवाद्विमुक्तः ॥।

नान्तस्त्वयाऽपि विदितो निजकोऽस्यनन्तः
का वा कथा दिविषदां भुवनं समस्तम् ।
त्वल्लीनमीदृशपदं तव किं ननु वर्ण्यं
वेदैरतीतमखिलात्तमुपाश्रये त्वाम् ॥

सृष्टिस्थितिप्रलयकारणमस्यनाथं
जीवस्य मायिकपरिभ्रममुक्तिदं च ।
कैवल्यमूर्तिमभयं श्रुतिगीतदिव्य-
माहात्म्यमच्युत ! नमामि हृदि स्थितं त्वाम् ॥

दत्तो वरो भुवि विना गुणदोचिन्ता-
मात्मप्रणाशनकरो भवतीति तत्त्वम् ।

सस्मार नापि गिरिजापतिराशुतोषः



तस्माद्वृकासुरभयात्तमपीपलस्त्वम् ॥

कस्यास्ति तावकसमत्वमिह क्षमायां
पादप्रहारजनितं भृगुणा यदङ्कम् ।
वात्सल्य सत्वगुणसूचकमादरेण
श्रीवत्सभूषणमुरस्यनिशं बिभर्षि ॥

आनीय विष्णुनिलयादति दुःखिताय
विप्राय पुत्रदशकं च समर्पयित्वा ।
पार्थं ररक्षिथ सखायमतः प्रसिद्धं
यत्पौरुषं तव कृतोद्भवमेव सर्वम् ॥

भक्तास्त्वदीयरिपवो बहवोऽप्यभूवन्
पत्नीततेस्तव कथा किमु वर्णनीया? ।
राम ह्रदेषु निशमय्य यदीयवाचं
प्रेमोद्गतां ववृषुराशु समस्तगोप्यः ॥

त्वन्नाम-सञ्चरितकीर्तनवीतपापान्
अस्पष्टमायिकदयानुदितात्मबोधम् ।
स्मृत्यैव पावितहृदो महतः प्रणम्य
प्राप्तुं यते गुरुपुरेश ! तव प्रसादम् ॥

प्राणाधिकप्रिय ! पदाम्बुजसेवकोऽप्य-
मङ्गीकृतोऽस्मि भवता यदि सानुकम्पम् ।
तन्निर्वृतिं प्रकटितुं वचनं न शक्तं
किं वा जनुरप्यपरमस्ति मयानु भाव्यम् ? ॥

चातुर्यमद्भुतकरं तव कृष्ण ! सर्व-
कार्येषु दर्शितमिदं युधि दानवानाम् ।
तद्वज्जयद्रथवधादिषु चात्मनाथं
तं त्वामुपास्य न भविष्यति कः कृतार्थः ? ॥

त्यक्त्वा धनञ्जयरथं स्वकृतप्रतिज्ञा-
मुल्लङ्घ्य भक्तशपथं सफलं विधातुम् ।
भीष्मं निहन्तुमिव सस्मितमात्तचक्रं
धावन्तमद्भुतकरं कलये भवन्तम् ॥

सर्वं विनश्यति महत्त्वमसूययेति
दुर्योधनस्य चरितं विशदीकरोति ।
वीरोऽपि सैनिकबलेन युतोऽपि सोऽयं
भीमेन हन्त ! निहतस्समरे दयार्हः ॥

(अनुवर्तते)

आपदि मुञ्चेयुः स्वान्प्राणानपि नो नमन्ति शत्रुपदोः ।
भिद्येत दुर्वह भराक्रान्तो न नमेन्महान् शिलास्तम्भः ॥

நெருக்கடியில் தன் உயிரையும் விடுவர். எதிரியின் கால்களில் விழமாட்டார். பெரிய கல் தூண் சுமக்க முடியாத சுமையால் அழுத்தப்பட்ட போதும் ஒடியுமே தவிர வளையாது.

# शरीरं मनश्च ।



—तेन्कच्चि-स्वामिनाथः ।

हलो वैद्याचार्य ! ..... वैद्याचार्यस्तत्रास्ते वा?'

'हाम्..... अहमेव भाषमाणोऽस्मि ....। किं कर्तव्यम्?' .....

'मम प्रेयसः कोऽप्यस्तीव मनोव्याधिः । अपि मनागागत्यात्र तन्मनोविकारं परीक्षितुं पार्यते?....

'स साधुर्भद्रवरः .... जानामि सम्यक्। तस्य न किमप्यनारोग्यं भवितु मर्हति ।'

'भिषग्वर ! स भवतश्चिरमित्रं भवतीति जानामि । वास्तवमेव तत्। ततोऽप्यगदङ्कारस्य मित्रमिति हेतोः तस्य मनोव्याधिर्नैव भविता' इति शासनं किमप्यस्ति?

'समीचीनं चिन्त्यते। अद्यैवाहमागन्ता तत्र। .... तस्य मनस्येव किल विकारः? 'तदीयं मनः कुत्रास्ति' इति अपि भवत्या प्रदर्शयितुं शक्यते?'

'भिषग्वर ! किं ब्रवीषि? ! न जानामि भवतोऽभिप्रायम् ।

'मनसः प्रवर्तनेन शरीरं सर्वकार्येषु प्रवर्तते इति सर्वविदितम् । तथाप्येतावता मनसः मूलस्थानं कुत्रेति न कोऽपि वेत्ति ।

'तथा चेत् मनसःशरीरस्य चानुगुण्यं कथं ज्ञायेत? भिषग्वरो भवानेव जानाति तदानुगुण्यं प्रवर्तनं च । 'भवानेव वदतु ।'

'अस्माकं शरीरस्थरक्तधारायां श्वेताणवः वर्तन्ते किल । तेष्वधिष्ठितानां तन्मात्राणामस्ति किंचिच्चटुलाकर्षकशक्तिः। यया बुद्धेस्तदा तदाऽऽगन्तुकाः आज्ञाविशेषाः संगृह्यन्ते यथाऽद्य परिदृश्यमानासु आण्टनासु। तद्विषयिणीं पार्यन्तिकीं स्थितिं परिशील्य ज्ञातव्यो भवति

शरीरमनसोः परस्परसम्बन्धः ।'



'वैद्यविशारद ! अस्मद्गृहपतेर्मनोगतं विकारव्यतिकरं परिहरेत्येव मया-उच्यते । किमिदं मनसः स्थानगवेषणाय प्रवर्तते भवान्?

'तदेव खलु मया पूर्वमुक्तम् - यत्तस्यैतादृशः व्यतिकरांशः न किमप्यन्यथा भवितुमर्हतीति । .... तथाप्यहमागत एव । भवतु, तस्येदानीं कीदृशी विक्रिया वर्तते? अनभिप्रेतं किमपि कर्तुमुद्युक्तो वा? सः ।.....

'हाम् ? तथैव....'

'कथमिव....?

'प्रसक्तेऽवसरे, हास्याय यत्किमपि चाटु भणितं मया....। सद्यस्स हसति, हसन्नेवास्ति....।'

'अहोबत.... विक्रिया वस्तुतस्तस्य वा? तव वा?....'

'हास्यालापे हासः स्वाभाविक एव । यदि न हसति, तदैवास्माभिः अन्यथा संभाव्यताबुद्धिः कर्तव्या । ...

'सर्वतो विषयविमर्शं विना भाषते भवानिति मन्ये । वस्तुतः गतमासीय पञ्चदशदिनावसरे हास्यमुक्तवती । अद्य तु मासो व्यतीतः । अद्यापि स विना विरामं हसन्नेवास्ति.... ।'

ओहो हो .....!

------------------------

तं केशपपाशं प्रसमीक्ष्य वृद्धां ग्रमान्तरागन्तुकशास्त्रिपत्नीम् ।
तैलाप्लुतिच्यावकचूर्णशेषं - बालोऽसि वत्साहमपाहरामि ॥
इत्यापतन्तीं बहु शोचमानां वासल्यपूर्णाक्षमुपक्षिपन्तीम् ।
वृद्धां च तां, तं च ममावसादं हासास्पदं नैव तु विस्मरामि ॥

# बालबोधः । (अनुवर्तते)

—प्राचार्यः डा. विष्णुपोत्तिः, उपकुलपतिः scsvmv विश्वविद्यालयः, काञ्चीपुरम् ।

तत्ते तानि तथा तत्ते तानि चैवं नपुंसके ।
सा च ते च तथा ताच्च ताञ्च ते च तथैव ताः ॥ १२६

तया ताभ्याञ्च ताभिश्च तस्यै ताभ्यां ततः परम् ।
ताभ्यस्तस्याश्च ताभ्याञ्च ताभ्यस्तस्यास्तयोरपि ॥ १२७

तासां तस्यां तयोरेवं तासु चैव स्त्रियां वदेत् ।
अयमिमाविमे चेम मेनमेवमिमौ तथा ॥ १२८

एनमिमाँश्च एनाँश्च अनेनैवनेन चैव तु ।
आभ्यामेभिश्च अस्मै च आभ्यामेभ्यस्तथा इदम् ॥ १२९

इयमिमे तथा चेमाः इमामेनामिमे तथा ।
एने इमाश्च एनाश्च अनया चैनया तथा ॥ १३०

आभ्यामाभिश्च अस्यै च इदं शब्दः क्रमात्स्त्रियाम् ।
इदमिमे इमानीति शेषं पुंवन्नपुंसकम् ॥ १३१

एष चैतौ च एते च एतच्छब्दः प्रकीर्तितः ।
अदसस्तु तथा रूप मसौ चैवममू अमी ॥ १३२२

यश्च यौ च तथा ये च या ये याश्च तथा च यत् ।
कश्च कौ च तथा के च का के काश्च तथा च किम् ॥ १३३

अन्यश्चान्यौ तथान्ये च अन्या अन्ये तथैव च ।
अन्यदन्ये च अन्यानि सर्वनामानि चिन्तय ॥ १३४

एकादयस्तु संख्यास्ते वाचकाः परिकिर्तिताः ।
त्रिष्वेकश्च तथा चैका एकं द्वौ द्वे तथा च द्वे ॥ १३५

त्रयस्तिस्रश्च त्रीणीति चत्वारश्च ततः परम् ।

चतस्रश्च तथा चैवं चत्वारीति ततः परम् ।। १३६

पञ्चभ्यस्तु समानास्ते त्रिषु लिङ्गेषु कीर्तिताः ।
पञ्च षट्च तथा सप्त अष्टौ नव दशेति च ।। १३७

मदीयो मामकश्चेति मामकीनस्तथैव च ।
अस्मदीयस्तथास्माकः आस्माकीनस्तथा पुमान् ।। १३८

त्वदीयस्तावकश्चैवं तावकीनस्तथैव च ।
युष्मदीयश्च यौष्माकः यौष्मकीणस्तथैव च ।। १३९

ईदृशस्तादृशश्चैवं यादृशश्च प्रकीर्तितः ।
कीदृशस्त्वादृशश्चैवं मादृशश्च भवादृशः ।। १४०

सम्बन्धं कथयन्त्येते त्रिषु लिङ्गेषु सन्ति च ।
मदीयाद्यास्तु स्त्रीलिङ्गे मदीयन्तु नपुंसकम् ।। १४१

तुलना कियते यत्र स्यातां तरप्तमपौ ।
शुक्लः शक्लतरश्चेति तथा शुक्लतमस्ततः ।। १४२

लिङ्गसंख्यान्वयो यत्र नास्ति तच्चाव्ययं स्मृतम् ।
अद्यस्सद्यस्तथाऽधश्च सायं प्रातस्तथा कदा ।। १४३

यदा किं किमुतेत्येवं किन्तु किम्वा कथञ्चन ।
तदानीञ्च समश्चेति सततं सहितं सह ।। १४४

पुर्वेद्युश्च परेद्युश्च पृथक् प्रतिदिनं पुनः ।
पुरः पुरा सकृद्भूयः भृशमुच्चैस्तथा वृथा ।। १४५

वाक्यनिर्माणकाले च प्रयोगे व्यक्तता भवेत् ।
अव्ययानां तथा चात्र दिङ्मात्रमुपदर्शितम् ।। (अनुवर्तते) १४६

# मुक्तकमौक्तिकानि ।

—श्रीसुन्दरराजः, I.A.S.(Retd.,) भुवनेश्वरम् ।

*विद्याविषयकचाणक्यनीतिश्लोकस्य टीका श्लोकः*

विद्या ददाति विनयं विनयी क्रमेण
　　पात्रत्वमेति धनमेति च पात्रतायाः ।
धर्मं करोत्यपि च कारयते धनेन
तस्मात् सुखं स लभतेऽत्र परत्र चापि ॥

*जगति भूतभवद्भविष्यः*

योगी जनः परिभवान्सहमान एव
　　निष्काम्यकर्म कलयन्मिलदन्नमश्नन् ।
कान्तासु वा कनक एव न सज्जमानः
　　साक्षादसौ जगति भूतभवद्भविप्यः ॥

*अङ्गीकुरुष्व भगवन्नरविन्दमेतत्*

अङ्गीकुरुष्व भगवन्नरविन्दमेतत्
　　अनन्ददं तव पदेऽत्र मयार्पितं ते ।
आत्मोपमानमिति तत्स्वयमेव विद्वान्
　　उच्चावचैः निजगुणैरुचितं कुरुष्व ॥

*सतां घृण्यो भूतः कथमपि नरो जीवति भुवि*

जनन्या जातो यो जठरकुहरात् कष्टत इतो
　　वसामांसैस्संयक् सुघटिततनुस्सन्दरवपुः ।
अकार्यं कुर्वाणस्सततमविनीतः कुचरितः
　　सतां घृण्यो भूतः कथमिह नरो जीवति भुवि ॥

*सुजनावमन्ता विचरति*



अयास्यन्नालस्यात् पठितुमपि विद्यालयमितः
स्वकं कर्म त्यक्त्वा कलिकलहकेलीरतमतिः ।
अगृह्णन् स्वान्दोषान् अपरगतदोषेक्षणपरः
खलो भूमौ कष्टं सुजनावमन्ता विचरति ॥

*नित्यो भ्रमन्नखिलदेवमयोऽस्ति सूर्यः*

प्रातर्नवो नव इवोदयवान् विवस्वान्
मध्यन्दिने खरतरस्स्वकरस्स भास्वान् ।
सायं मृदुः निशि निलीय न दृयमानः
नित्यो भ्रमन्नखिलदेवमयोऽस्ति सूर्यः ॥

*न बुद्धिरस्ति ते*

फलानि पुष्पाणि वितीर्णवान् प्रभुः
समर्प्य तानि प्रथमं तु तत्पदे ।
ततः परं तान्युपभोक्तुमर्हसि
न चेत् विमूढोऽसि न बुद्धिरस्ति ते ॥

*जातस्स्तनन्धयशिशुः कथमन्ययमातुः*

कारागृहे जननवान् प्रभुरौग्रसेनेः
राकाशशाङ्क वदनद्युतिमाननुग्रः ।
हित्वा स्तनन्धयशिशुत्वमिहात्ममातुः
जातस्स्तनन्धयशिशुः कथमन्यमातुः ॥

***लक्ष्मीर्हि प्रथमा प्रभोः परमियं याऽचार्यभूता नृणां***

मोहिन्या अवतारमीयुषि हरौ श्रीवेङ्कटाद्रावितः
सैरन्ध्रीव रमाऽनुयाति विदुषीं चन्द्रं यथा रोहिणी ।
लक्ष्मीर्हि प्रथमा प्रभोः परमियं याऽचार्यभूता नृणां
तस्मान् मोहनरूपधारणपटुं सन्दर्शयन्तीव तम् ।।

***कविता पुष्पवत्यास्ते रतिरीतिरसावहा***

कवित्वं यत् कवेर्बाल्ये तत् जृम्भत्कुड्मलोपमम् ।
कविता पुष्पवत्यास्ते रतिरीतिरसावहा ।।

***कविराजोऽपि राजेत स्त्रिया कवितयैव सः***

नपुंसककवित्वेन कविर्नहि विराजति
कविराजोऽपि राजेत स्त्रिया कवितयैव सः ।।

इन्द्रियाणां जयाच्छूरः पण्डितो धर्मचर्यया ।
हितप्रियोक्तिभिर्वक्ता दाता संमानदानतः ।।

புலன்களை வெல்வதால் சூரனாகிறான். நேர்மையுள்ள நடைமுறையால் பண்டிதனாகிறான். இதமாகவும் பிரியமாகவும் பேசுவதால்.

ईश्वरो विपदि ध्यातो न प्रसीदति मय्यहो ।
कुतोऽहं संपदि सुखे न स्मृतोऽपीति पृच्छति ।।

நெருக்கடி நேர்ந்தபோது ஆழ்ந்து த்யானித்தும் ஈசன் என்னிடம் பரிவு காட்டவில்லை. இது பரிதாபமானது.செழிப்பிலும் இன்பத்திலும் என்னை நீ நினைக்கக் கூட இல்லையே ! என்று அவர் கேட்கிறார்.

# शब्दविमर्शः - इण् धातोरनेकार्थकप्रयोगः ।

—डा.वि.आर्. मनोजः, उपनिर्देशकः, विन्मयशोधसंस्थानम्

इण् गतौ (अदा. १०४६) इत्यस्य धातोः अनेकार्थकप्रयोगानामयं सामान्यसङ्ग्रहः—

१. अधिगमे स्मृतौ चार्थयोः अध्येति इत्यधिपूर्वस्य इण् गतौ इत्यस्य प्रयोगः । गत्यर्थकाः ज्ञानार्थकाश्च भवन्ति । स्याच्चिन्ता स्मृतिराध्यानमित्यमरः । समानवस्तुसन्दर्भे स्मरणं भूतपूर्वकमिति भरतः । अनुभूतविषयासम्प्रमोषः स्मृतिरिति पतञ्जलिः (योग. १.११) । ममैवाध्येति नृपतिः तृष्यन्निव जलाञ्जलेरिति भारविः (किरा. ११.७४) ।

२. अभिक्रमेऽर्थे अभ्येति इति अभिपूर्वः इण् धातुः । अहितान्प्रत्यभीतस्य रणे यानमभिक्रम इत्यमरः । इदं-जिघत्सामपहाय भूयसीं न सस्यमभ्येति मृगीकदम्बकमिति भारविः (किरा.४.३३). ।

३. अस्तङ्गमेऽर्थे अस्तमेति इति अस्तंपूर्वः इण् धातुः । अस्तमित्यव्ययम् । 'स्वरादिनिपातमव्ययम्' ९१.१.३७) इत्येनेन सङ्गृहीतत्वात् । अस्तस्तु चरमक्ष्माभृदित्यमरः । अस्तेमति युगभुग्नकेसरैः सन्निधाय दिवसं महोदधाविति कालिदासः ।। (कुमा. ८.४२). ।

४. उदयेऽर्थे उदीयते उदेति उज्जिहीते इत्येते प्रयोगाः । सर्वत्र उत्पूर्वः इण् धातुः प्रयुज्यते। उदीयते इत्यत्र कर्मणि 'सार्वधातुके यक्' (३.१.६७) इति यक् । 'अकृत्सार्वधातुकयोर्दीर्घः'

((७७.४.२८) इति दीर्घः । उदयः पूर्वपर्वतः इत्यमरः । उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पय इति कालिदासः (शाकु. ७.३०) । उदित्युपसर्गपूर्वाः गत्यर्थकधातवः प्रायः उदयार्थाभिधायकाः ।

५. गतावर्थे एति इति इण् धातोः प्रयोगः । चन्द्रारविन्दविजयोद्यतवक्त्रबिम्बे चापल्यमेति नयनं तव शैशवे न इति लीलाशुकः । (कृष्ण ३१) ।

६. ज्ञानविश्वासयोरर्थयोः प्रत्येति इति प्रतिपूर्वः इण् धातुः प्रयुज्यते । शिष्टानुशिष्टो हि गत्यर्थकानां ज्ञानार्थकत्वाभ्युपगमः । मोक्षे धीर्ज्ञानमित्यमरः । पारिभाषिकश्चैतत् । लौककिकेष्वपि विषयेषु ज्ञानशब्दः प्रयुक्तो दृश्यते । समौ विस्रम्भविश्वासावित्यमरः ।

७. पलायनेऽर्थे अपैति इति अपपूर्वः इण् धातुः । भवानपीदं परवानवैति महान्हि यत्नस्तव देवदाराविति कालिदासः (रघु.२.५६) ।

८. भ्रमेऽर्थे पर्येति इति परिपूर्वस्य इणः प्रयोगः । भ्रान्तिर्मिथ्यामतिर्भ्रम इत्यमरः ।

९. मरणेऽर्थे परैति - प्रैति इत्यनयोः यथाक्रमं परापूर्वः तथा प्रपूर्वकश्च इण् धातुः । स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः । अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियामित्यमरः । तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपुरिति भारविः ।। (किरा. १.३९) ।

१०. मैथुनेऽर्थे व्यवैति इति वि अव इत्युपसर्गद्वयपूर्वस्य इणः

प्रयोगः । व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतमित्यमरः ।

११. विघ्नेऽर्थे अन्तरेति प्रत्यैवैति इति च प्रयोगौ । अन्तरेति इत्यस्मिन् अन्तर् इत्येतत्पूर्वकः इण् धातुः । अन्तरित्यव्ययम् । स्वरादिनिपातमव्ययम् (१.१.३७) इत्यनेन सङ्गृहीतत्वात् । प्रत्यवैति इत्यत्र प्रति, अव इत्युसर्गद्वयपूर्वः इण् धातुः । विघ्नोऽन्तरायः प्रत्यूह इत्यमरः ।

१२. विनाशेऽर्थे अप्येति इति अपिपूर्वस्य इणः प्रयोगः । विनाशः स्याददर्शनमित्यमरः ।

१३. विभ्रमेर्थे विपर्येति इति वि परि इत्युपसर्गद्वयपूर्वस्य इण् धातोः प्रयोगः । चेष्टालङ्कारे भ्रान्तौ च विभ्रम इत्यमरः । विविधानामङ्गानां वागङ्गाहार्यसत्त्वयुक्तानाम् । मदराजहर्षजनितो हृद्योऽसौ विभ्रमो ज्ञेयः । इति भरतः । स्त्रीणां विलासविव्वोकविभ्रमा इत्याद्यमरः ।

१४. सङ्गत्तावर्थे समवैति इति सम् अव इत्युपसर्गद्वयपूर्वः इण् धातुः । सङ्गतं हृदयङ्गममित्यमरः; । मेलने सङ्गसङ्गमावित्यप्यमरः ।

२५. संश्रवेऽर्थे अभ्युपैति इति अभि उप इत्युपसर्गद्वयपूर्वः इण् प्रयुज्यते । 'एत्येधत्यूठसु' (६.१.८९) इति वृद्धिः । अभ्युपेयत इत्येतदस्यैव कर्मणि रूपम् । उपसर्गवलादयमर्थः । संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः । अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः इत्यमरः ।

दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायाश्चित्तमिवाकरोत् ।१।

पदच्छेदः :- दृढभक्तिः इति ज्येष्ठे राज्यतृष्णापराङ्मुखः मातुः पापस्य भरतः प्रायश्चित्तं इव अकरोत् ॥ (१० पदानि)

*शब्दधातुरूपाणि*

दृढभक्तिः -दृढभक्तिः भक्ती भक्तयः - इका.पुं.प्र.एक ।
ज्येष्ठे -ज्येष्ठे ज्येष्ठयोः ज्येष्ठेषु - अका.पुं.स.एक ।
राज्यतृणापराङ्मुखः -पराङ्मुखः मुखौ मुखाः - अका.पुं.प्र.एक ।
मातुः -मातुः मात्रोः मातॄणाम् - ऋका.स्त्री.ष.एक ।
पापस्य -पापस्य पापयोः पापानां - अका.नपुं.ष.एक ।
भरतः -भरतः भरतौ भरताः - अका.पुं.प्र.एक ।
प्रायश्चितम् -चित्तं चित्ते चित्तानि - अका.नपुं.द्वि.एक ।
अकरोत् -अकरोत् अकुरुतम् अकुर्वन् - 'डुकृञ् करणे' धातोः लङ्. प्र.पु.एक ।

*प्रतिपदार्थः*

ज्येष्ठे - மூத்தவரிடத்தில், दृढभक्तिः - உறுதியான பக்தியுள்ள, राज्यतृष्णापराङ्मुखः - ராஜ்ய ஆசையினின்றும் மனதைத் திருப்பிய, भरतः - பரதன், इति = இவ்வாறு, मातुः - தாயின், पापस्य - பாவத்திற்கு, प्रायश्चित्तं - பிராயசித்தத்தை, अकरोत् इव - செய்தான் போலும்.

*व्याकरणविशेषः*



दृढभक्तिः दृढं (दृढा) भक्तिः यस्य सः ।

राज्यतृष्णापराङ्मुखः - राज्ये तृष्णा - तस्याः पराङ्मुखः ।

*कोषः*

'अस्त्री पङ्कं - पुमान्पाप्मा पापं किल्बिषकल्मषम्' 'गाढबाढदृढानि च'

*भावार्थः*

श्रीरामे गाढभक्ती राज्यतृष्णाविमुखः भरतः निष्कलङ्कस्य रामस्य वनप्रेषणरूपस्य स्वमातृकृतस्य पापस्य प्रायश्चित्तं अपनोदकं कर्माकरोदिव ॥

*विंशः श्लोकः*

रामोऽपि सह वैदेह्या वने वन्येन वर्तयन् ।
चचार सानुजः शान्तो वृद्धेक्ष्वाकुव्रतं युवा ॥

पदच्छेदः - रामः अपि सह वैदेह्या वने वन्येन वर्तयन्
चचार सानुजः शान्तः वृद्धेक्ष्वाकुव्रतं युवा ॥ (१२ पदानि)

*शब्दधातुरूपाणि*

| | |
|---|---|
| रामः | - रामः रामौ रामाः - अका.पु.प्र.एक । |
| अपि, सह | - अव्य । |
| वैदेह्या | - वैदेह्या वैदेहीभ्यां वैदेहीभिः - ईका.स्त्री.तृ.एक.। |
| वने | - वने वनयोः वनेषु - अका.नपुं.स.एक । |
| वन्येन | - वन्येन वन्याभ्यां वन्यैः - अका.नपुं.तृ.एक । |
| वर्तयन् | - वर्तयन् वर्तयन्तौ वर्तयन्तः - तका.पुं.प्र.एक । |

चचार- चचार चेरतुः चेरुः - 'चर गतौ भक्षणे च' इति धातोः लिटि. प्र.पु.एक ।

सानुजः -सानुजः सानुजौ सानुजाः - अका.पुं.प्र.एक ।

शान्तः -पूर्वोक्तवत्

वृद्धेक्ष्वाकुव्रतं -व्रतं व्रेते, व्रतानि - अका.न.पुं.द्वि.एक ।

युवा -युवा युवानौ युवानः - नका.पुं.प्र.एक ।

***प्रतिपदार्थः***

सानुजः - தம்பியுடன் கூடியவரும், शान्तः - மன அமைதியுடையவருமான; रामः अपि - ராமரும் वैदेह्या सह - சீதையுடன், वने - காட்டில், वन्येन - காட்டிலுள்ள கிழங்கு, கீரை முதலிய பொருட்களால்; वर्तयन् - உயிர் வாழ்ந்து கொண்டு, वृद्धेक्ष्वाकुव्रतं - வயதான இக்ஷ்வாகு வம்சத்தினரின் தவத்தை, युवा - யௌவனப் பருவத்தினராகவே; चचार -- மேற்கொண்டார்.

***व्याकरणविशेषः***

वन्येन -वने भवं वन्यं - तेन ।

सानुजः -अनुजेन सहितः ।

वृद्धेक्ष्वाकुव्रतम् - वृद्धेक्ष्वाकूणां व्रतम् । तत्

**कोषः**

नियमो व्रतमस्त्री

**भावार्थः** - ससीतासौमित्रिः रामः अरण्ये वन्यकन्दमूलादिभिः वृत्तिं कुर्वन् रघुवंशीयानां वार्धकीं तपोवृत्तिं यौवनस्थ एव अन्वतिष्ठत् ॥

*—'र. रङ्गनाथशर्मा, सं.वि.सं. काञ्चीपुरम्'*

# स्वातन्त्र्यम्

—डा. के. कुञ्जुण्णि राजा

(रजतजयन्त्युतत्सवाङ्गतया प्रवृत्ते विद्वत्सदसि भागं ऊढवता विद्वद्वरेण भाषितस्य सङ्ग्रहोऽयम् । महोदयश्च मदराससर्वकलाशालासंस्कृतविभागे विभागाध्यक्षः, प्राचार्यश्च पूर्वम् । —सम्पादकः

स्वातन्त्र्यममृतं नाम स्वातन्त्र्यं खलु जीवितम् ।
पारतन्त्र्यं मनुष्याणां मृत्योरपि भयङ्करम् ।।

स्वातन्त्र्यहीनस्य जनस्य लोके
भोगेन सौख्यं न कदापि लभ्यम् ।
शुकः कथं पञ्जरबन्धनस्थो
लभेत हा स्वादुफलेषु तुष्टिम् ।।

अस्माकं भारतभूमिरधुना स्वतन्त्रा । पौरजानपद-स्वामिकमस्माकं प्रजायत्तसिद्धिभरणं निर्विघ्नं विजेजीयतामा-चन्द्रतारकम् । स्वातन्त्र्यस्य समुज्ज्वलप्रकाशेनानुगृहीतं भारतस्यात्मीयजीवितपङ्कजं सदा सोन्मेषं विकसतु । स्वातन्त्र्यास्वादनाह्लादस्य तरलतरङ्गैः शुद्धा विलसन्तु मानवाः सर्वत्र ।

*त्रिवर्णचक्राङ्कचलत्पताकाः स्वातन्त्र्यसन्देशवहा मनोज्ञाः ।*
*मन्दानिलान्दोलनचाल्यमाना महाजनाशां परिपूरयन्तु ।।*

भारतस्य राष्ट्रपिता महात्मा गान्धिजी प्रथमं सर्वेषामस्माकं कृतज्ञतानिर्भरं साष्टाङ्गनमस्कारमर्हति, यः खलु

भारतभूमेः स्वातन्त्र्यसमरे केवलाहिंसाकवचेनावृताङ्गः सत्याग्रहैकनिष्ठ एव आङ्गलसाम्राज्यसिंहं सुधीरं सावधानं च शान्तिमन्त्रेण विजित्य मातृभूमेः स्वातन्त्र्यं सम्पादितवान्।

अन्ये च बहवः स्वातन्त्र्यभटाः प्रातः स्मरणीया वर्तन्ते। 'स्वातन्त्र्यमस्माकं धर्मः सर्वेऽपि स्वातन्त्र्यमर्हन्ति' इत्युद्घुष्टवान् लोकमान्यो बालगङ्गाधरतिलकः, 'नेशे बलस्येति चरेदधर्मम्' इति महाभारतवाक्यं प्रमाणीकृत्य हिंसात्मकमार्गेऽपि दत्तदृष्टिः सुभासचन्द्रभासः । 'लक्ष्यप्राप्तये सर्वथा न्याय्यो मार्ग एवास्माभिः स्वीकर्तव्यो नान्याय्यः' इति सुदृढं प्रख्यापितवती अन्ना वसन्ता। नेतारं निश्शङ्कमनुगन्तुं सदा सन्नद्धाः सामान्यजनाश्च। तेषां निःस्वार्थकर्मणां परिणतफलमद्य भुञ्जमहे वयम्। भारतमद्य स्वतन्त्रं राष्ट्रम्। नाद्य वयं राज्ञः प्रजाः, किं तु राष्ट्रस्य पौराः ।

किमिदं सत्यम्, यद्वयं राष्ट्रीयस्वातन्त्र्यं लब्धवन्तः, स्वातन्त्र्य सुखमनुभवन्तश्चेति? आसेतुहिमालयं पूर्वापर-समुद्रयो-र्मध्यभूमिरस्मज्जन्मभूमिर्भारतदेशः, वयं भारतीया इति विश्वासः अभिमानो वास्मन्मनसि सदा वर्तते किम्?

विभिन्ना अस्माकं भाषाः, विभिन्ना अस्माकं जीवितरीतयश्च । वयमधुनापि प्रान्तीयतापरतन्त्राः स्मः । द्राविडाः केरलीयाः वङ्गाः कलिङ्गा गुर्जराः काश्मीराः इत्यादि सङ्कुचित-चिन्तावशंवदाः । भाषाभेदमाश्रित्यैव कृतमस्मद्राष्ट्र-विभजनम् । भारतीयोऽहमिति चिन्तामेतद्विभजनं तिरस्करोति। वृक्षानेव पश्यामः, न वनम्। वयं हैन्दवाः वयं

क्रैस्तवा; वयं महम्मदीयाः वयं शिखा इत्यभिमन्यामहे, न वयं

भारतीया इति । आध्यात्मिक- तत्त्वमपि 'ममेश्वर' इति स्वार्थतास्वर्णपेटिकायां निक्षिप्य बन्धनस्थं कुर्मः । भारतीयनदीजलानामपि कृते परस्परं विवदमानानि कलहायमानानि वर्तन्ते प्रान्तीयशासनानि । स्वार्थपराणां स्वेच्छाप्रभूणां मुष्टिभ्यो नाद्यापि मातृभूमेर्मोचनं सम्पूर्णम् ।

स्वार्थलोलुपाः स्थानमानधनतृष्णावंशदाः धर्म्यं मार्गं विहायापि समार्जयितुमर्थं काममुपभोक्तुं च बद्धश्रद्धा वर्तन्ते नेतारम्मन्यास्तदनुयायिनश्च । विषयासक्तिरधिकारतृष्णा च सर्वत्र दृश्यते ॥ 'द्वित्राङ्गुलिपरीणाहजिह्वाचलनपटवो जनानां प्रातिनिध्यं लभन्ते भरणधुरीणा भवन्ति च ।

अतिक्रान्तसुखः कालः प्रत्यवस्थितदारुणः ।
श्वः श्वः पापीयदिवसा पृथिवी गतयौवना ॥

इति महाभारतपद्यं सत्यमेवेति मे प्रतिभाति ॥

'परोपकारः पुण्याय पापाय परपीडनम् इति वाक्यं प्रमाणीकुर्वन्तः सन्ति सन्तः कियन्तः ? सन्तु नाम द्वित्राः पञ्चषा वा । तैः किं भारतभूमिं समुद्धर्तुं तामुन्नतं पदं समारोपयितुं च शक्यम् ?

यथार्थस्वातन्त्र्यं न वस्तुतः स्वेच्छानुवर्तित्वमितर-स्वातन्त्र्यासहिष्णु । यदि चन्द्रबिम्बमादाय शाणोपलं कर्तुं कश्चित् प्रवर्तते, यदि वा ब्रह्माण्डाण्डकटाहानि कन्दुकक्रीडार्थं प्रवर्तयितुमिच्छति, न तत् स्वातन्त्र्यपदमर्हति । यदि स्वातन्त्र्य-वादिनोऽध्वनीनाः राजमार्गेषु यथेष्टं प्रान्तीयपादचारपद्धतिं विहाय

मध्येपथमितस्ततो गच्छन्ति, वाहनयन्तारोऽपि स्वातन्त्र्यवादिनो निमीलिताक्षाः वाहनानि शीघ्रं चालयन्ति, किं भविष्यतीति सर्वैरूह्यमेव। नैतत् स्वातन्त्र्यम्। दुःस्वातन्त्र्यं खलु तत्।

तस्काराणां चौरस्वातन्त्र्यं कामुकानां अबलाजन-बलात्सङ्गस्वातन्त्र्यं, राष्ट्रस्य राष्ट्रान्तराक्रमणस्वातन्त्र्यं, कामिनीकामुकानां चत्वरेषु देवालये वा निर्लज्जचुम्बना-लिङ्गनादिस्वातन्त्र्यं, विद्यार्थिनां सर्वदाप्यनध्ययन-स्वातन्त्र्यं, अध्यापकानां मौनवर्तित्वस्वातन्त्र्यं च यदि तर्हि रक्षापुरुषाणां प्रशासकानां विद्यालयानां नीतिन्यायपद्धतेश्च नास्ति प्रयोजनम्। सर्वमेतत् दुःस्वातन्त्र्यं, न स्वातन्त्र्यम्। विना कारणं नियन्त्रणमेवा-स्वातन्त्र्यम्, सकारणं जनता-क्षेमार्थं नियन्त्रणं दुःस्वातन्त्र्य-नियन्त्रणम्। अस्वातन्त्र्य-दुःस्वातन्त्र्ययोर्भेदः सूक्ष्मग्राह्यः सर्वैर्विवेच-नीयश्च। स्वातन्त्र्यवादी न कदाचिदपि दुःस्वातन्त्र्यवादी' भवितु मर्हति ॥

कर्पूरक्षारयो रूपं तुल्यं, भिन्नो गुणस्तयोः।
पुण्यकृत्पापिनोरेवं नाकृतिर्मातुमर्हति ॥

கர்பூரத்திற்கும் சார உப்பிற்கும் தோற்றம் ஒத்திருக்கும். அவற்றின் தன்மை மாறபட்டது. புண்யம் செய்தவனுக்கும், பாபிக்கும் அவ்வாறே. தோற்றம் மட்டும் ஒன்றை அளவிடாது.

# महागुरुं नमामि ।

–Dr. O.N. Ravi, Dadar, Mumbai

यादृशस्तादृशोवापि मादृशोऽस्ति न कश्चन ।
इत्यहंभाविसङ्काये सद्दृश्यं नौमि तं गुरुम् ॥

दीनानाथदरिद्राणां शान्दिदः शाङ्करांशभाक् ।
ग्रीष्मे प्रच्छायशीतो य स्तं वन्दे महागुरुम् ॥

'तेन त्यक्तेन भुञ्जीथा' इति श्रुत्यन्तशासनम् ।
मूर्तं काषायसंवीतं साक्षान्नौमि महागुरुम् ॥

वेदाध्यायी व्रतोत्साही सत्यवाक् शुद्धचेतनः ।
यस्यैव प्रीतिपात्रं तं शतं नौमि महागुरुम् ॥

गृहे सौधे कुटीनरान्ते गोष्ठे वा शिबिकासने ।
ककुटासनिनं मूर्तज्ञनं नौमि महागुरुम् ॥

यद्भूषाकैतवच्छन्ना रुद्राक्षमालिकादयः ।
नूनं रत्नमहार्घास्ते तं नमामि महागुरुम् ॥

शिखावान् वेदशास्त्री च शुद्धशीलश्च यत्कृतात् ।
प्रसादाद्धनिका जातास्तं नमामि महागुरुम् ॥

कुल्याखातकथाव्याजात् कर्णाटकवटोः पटोः ।
गायत्री-लक्षशतोद्धारी यस्तं वन्दे महागुरुम् ॥

वेदाध्यायेष्वशक्तानां स्तोत्र-पावै-षडङ्गकैः ।
भक्तिं प्रोत्साह्य हृष्टो यस्तं वन्दे महागुरुम् ॥

मामप्यशक्तमुत्साह्य हसन्तं रहसि स्थितम् ।
बालचापल्यमालोच्य प्रार्थये क्षम्यतामिति ॥

# भक्तरामदासः



——श्रीमती गौरीवेङ्कटरामः, मुम्बै ।

आन्ध्रदेशे वारङ्गल्प्रदेशे खम्मल् तालुके नेलकोण्डपल्लि नामके ग्रामे १६२० तमे वेर्षे लिङ्गण्णामन्त्री कामाम्बा दम्पत्योः एकः पुत्रः जातः । नियोगिब्राह्मणौ दम्पती ऐश्वर्यसम्पन्नौ पुत्रजन्मना अतीव तुष्टौ जातौ । पुत्रस्य नाम च गोपण्णा इति चक्रुः ।

बालकस्य बाल्यावस्था सन्तोषपूर्णा; अभवत् । विवाहवयसि प्राप्ते पित्रोः इच्छां सम्प्रदायं च अनुसृत्य कामलानाम्नीं सुन्दरीं परिणीतवान् । तस्य मातुलौ मदण्णा अक्कण्णा कुतुबशाहीसुल्तान् अबुलहस्सन् ताना शाह इत्यस्य शासने मन्त्रिणौ आस्ताम् । तयोः सहायेन, शीघ्रमेव गोपण्णा पलवञ्छा तालुकस्य 'तेहसिलदार' पदवीं प्राप्तवान् । गर्भिण्या स्वपत्न्या सह तत्र गत्वा कुटुम्बं प्रस्थाप्य स्वपदव्याः कर्तव्यानि अपि सत्येन दयया च कर्तुमारभत । तस्मात् तत्रस्थाः जनाः अपि दयावन्तः हितैषिणं तेहसिल्दारं प्रति आदर-भक्तिपूर्णं व्यवहारं चक्रुः । तदनन्तरं उचितकाले गोपण्णा - कमला - दम्पत्योः पुत्रः जातः । पितरौ तस्य रघुरामेति नाम प्रददतुः ।

गोपण्णा स्वकर्मणि निरतः । तथैव अयोध्यापतौ श्रीरामे तस्य अनन्या भक्तिः श्रद्धा च अवर्धत । बह्वीः कृतीः सामान्य-नानारागेषु विरच्य ताः च रामाय समर्प्य जगौ ।

एकवारं भद्राचलक्षेत्रे उत्सवः प्रचलति इत्यतः पलवञ्छावासिनस्सर्वे उत्सवदर्शन-सेवनार्थं तत्र जग्मुः । गोपण्णा अपि

पत्नीपुत्रसहितः गन्तुं निश्चिकाय । सः भद्राचलक्षेत्रविषये बहुश्रुतवान् । इदमपि च अजानात् यत् तत्रत्यप्रभोः प्रेरण्या एव पोतण्णा नामकः भक्तः तेलुगुभाषायां रामायणं रचितवान् । भद्राचलं अभितः रामायणसम्बन्धिन्यः बह्व्यः घटनाः अभवन् इति लोकानां विश्वासः अस्ति इति सः श्रुतवान् ।

तत्र गत्वा पर्णशालायां स्थापिताः वैकुण्ठरामलक्ष्मण - सीतानाम् मूर्तीः ददर्श । पौरवलधामक्का नाम्नी काऽपि वृद्धा रामभक्ता तासाम् मूर्तिनाम् रक्षां प्रतिदिनं यथाकालं निवेदनं च करोति स्म । सा च गोपण्णाय एतासां रामदिमूर्तीनां कथामेवं जगाद । इतः भद्राद्रेः समीपस्थं भद्रिरेड्डिपलं मम ग्रामः । एकस्यां रात्रौ रामः मम स्वप्ने आगत्य एवं जगाद - 'अहं भद्राद्रौ गुप्तः तिष्ठामि । ऋषयः यतयः च मम पूजां कुर्वन्ति । त्वं मां बहिरानीय रक्षस्व । उचितकाले कश्चित् भक्तः आगत्य मदर्थं मन्दिरं रचयिष्यति' इति । ततः विचिन्वती वल्मीकौ ताः मूर्तीः अपश्यम् । गोदवरीनद्याः घटेन पानीयमानीय, वल्मीकस्योपरि पुष्कलमात्रया अभिषिच्य ततः मूर्तीः प्राप्तवती । तदनन्तरं मृदा वेदिकां निर्माय, तत्र मूर्तीः अस्थापयम् । ततः वर्षातपेभ्यः रक्षणार्थं पर्णानि आनीय छदिं च रचितवती । तदा प्रभृति अत्र देवार्चनं कृत्वा तेभ्यः निवेदनं च करोमि इति ।

तस्या पादमूले उपविशन् कथामेतां च शृण्वन् गोपण्णा भावविह्वलः सञ्जातः । नेत्राभ्याम् अश्रूणि अपतन् । भद्राद्रौ राममन्दिरस्य दयनीयां दशां दृष्ट्वा मूर्तयः वातातपेन पीडिताः इति विचिन्त्य सः दुःखितः । सद्यः एव भद्राद्रिमागत्य तत्रैव स्वयं

राममन्दिरनिर्माणाय निश्चयं चकार।


मन्दिरनिर्माणं बहुधनसाध्यं, तत्तु गोपण्णा-सकाशे नासीत्। सः स्व तेहसिल वासिनां पुरः स्वसमस्यां निवेदितवान्। ते सर्वे विशालहृदयेन स्ववशे वर्तमानानि नानाविधानि आभरणानि अन्यवस्तूनि च राममन्दिराय ददुः। अनेन विधिना यद्यपि बहुधनं लब्धवान् तथाऽपि मन्दिरनिर्माणायपर्याप्तं नासीत्। तम् चिन्तितं वीक्ष्य तस्य तेहसिल्वासिन्वासनः ऊचुः, त्वं तानाशाहतः अनुज्ञां स्वीकृत्य अस्माभिः दत्तं 'यत् राजशुल्कं (tax) तेन धनेन मन्दिरनिर्माणं कुरु। पश्चात् यदा वयं शस्यं निक्रीय भवते पुनः धनं दास्यामः तत् धनं त्वं ताना शाहाय प्रतियच्छ इति। गोपण्णा इदं उपायं सुष्ठु वर्तत इति स्वीकृतवान्। तान शाहकृते पत्रमपि सद्यः प्रेषितवान्। मन्दिरनिर्मणं तेन इति स्थगितः इति चिन्तिम्लनोऽपि गोपण्णा, अनन्तरं चिन्तयामः इति निश्चित्य राज्यकरनिमित्तं प्राप्तं धनं स्वीकृत्य मन्दिरं कारयामास।

सुन्दरः आलयः निर्मितः यथाकालम्। अधुना नवीना समस्या उत्पन्ना। गोपुरस्योपरि स्थापनाय सुदर्शनचक्रं कुतः लभ्येत इति चिन्तयन्नेव स्वप्तुम् ययौ। तत्स्वप्ने श्रीरामः आगत्य 'नद्यां स्नाहीति' शशास। अतः प्रातः उत्थाय रामं स्वप्नं च चिन्तयन् नदीं ययौ। स्नानवेलायां गोदावर्यां सः सुदर्शनचक्रं लेभे। आनन्दभरितः सः तत् आनीय देवालये यथाविधि स्थापयामास। इत्थं देवालयः सम्यक् निर्मितः। तदनन्तरं तत्र मन्दिरे सीता-लक्ष्मणसमेतस्य रामचन्द्रस्य सर्वाः पूजाः प्रतिदिनं भक्तिश्रद्धाभरेणः प्रारब्धाः।

गोपण्णा अतीव सन्तुष्टः । रामचन्द्रं प्रशंसन् सः बहूनि

कीर्तनानि विरच्य तानि अगायत च । प्रभुः तस्मै 'रामदासः'
इति अपरं नाम ददौ । ततः प्रभृति तत्र सर्वत्र 'गोपण्णा रामदासः'
इति नाम्ना एव ज्ञातः प्रसिद्धिं च प्राप ।

एतस्मिन्नन्तरे, गोलकोण्डाक्षेत्रे यत्र तानाशाहः शशास प्रप्रथमं गोपण्णाद्वारा प्रेषितं पत्रं दुष्टैः मन्त्रिभिः लब्धम् । गोपण्णा - प्रसिद्ध्या मत्सराविष्टाः तत् पत्रं तानाशाहाय न दत्तवन्तः, प्रत्युत, गोपण्णा राजीकीयशुल्कं जनेभ्यः स्वीकृत्य राज्ञः अनुमतिं विना तेन धनेन भद्राचलक्षेत्रे रामचन्द्राय मन्दिरं रचितवानिति' तस्मै निवेदयामासुः । क्रुद्धः तानाशाहः तं निगृह्य राजसभां आनीतवान् ।

राजसभायां गोपण्णा सविनयं प्राह यत् पत्रद्वारा अनुमतिं याचित्वैव करधनं मन्दिरार्थं व्ययीकृतवान् । न तावदेव, शस्यसंग्रहणानन्तरं जनाः धनं दास्यन्ति तदा अहं राजकीय-शुल्कधनं पूर्णतः प्रतिदास्यामीति । परं तानाशाहः तानि वाक्यानि न स्वीचकार । 'त्वं तु कररूपेण प्राप्तानि षट्लक्षवराहाणि क्षेत्रनिर्माणे व्ययितवान् । अतः कोलकोण्डा दुर्गस्थे कारागारे बद्धो भव-इत्याज्ञापयत् । यावत् सः षड्लक्षमितसुवर्णं न प्रतिदास्यति तेन तत्रैव स्थातव्यम् । न तावदेव, रामदासः रामसङ्कीर्तनं मा करोतु तथा सः नानाविधैः प्रकारैः पीडितव्यः यथा सः राममेव विस्मरेदिति स्वकिङ्करानपि शशास । तानाशाह ऐच्छत् यत् पीडामसहमानः रामदासः मया कृतं नोचितमिति स्वीकुर्यात् ।

कारागृहे किङ्कराः तम् कशाघातैः, शूलाघातैः च पीडितवन्तः । न तावदेव, तदनन्तरं तत्र व्रणेषु लवणमपि चिक्षिपुः ।

तस्मै यदाकदाचित् अन्नमेव न ददुः कदाचिच्च पूतं पुर्युषितं चान्ते

ददुः। रामदासः तु सर्वदा एव दुःखं, क्रोधं, प्रार्थनां च प्रकटयन् रामनाम लिलेख। एवं द्वादशवर्षाणि सः तस्मिन् कारागृहे असह्यवेदनामनुभवन् उवास। परं एतेषु वर्षेषु तस्य भक्तिः श्रद्धा च अवर्धत एव। एकस्मिस्यां रात्रौ तानाशाहः रात्रौ विश्रमार्थं शयनकक्षां प्रविश्य पर्यङ्के शेते स्म। तदा द्वौ बालकौ तं उत्थापयामासतुः। तौ ऊचतुः, 'आवां रामोजी लक्ष्मणोजी च। एतानि षड्लक्षवराहाणि स्वीकुरु। तदर्थचिटिकां प्रदाय, गोपण्णावर्यं सद्यः मोचय'' इति वदन्तौ तौ अद्भुततेजस्विनौ बालकौ तं प्रति सुवर्णनाणकयुक्तं स्यूतं चिक्षिपतुः। तदनन्तरं स्वीकारचिटिकां नीत्वा, तां चिटिकां गोल्कोण्डा कारागाररक्षकाय दर्शयित्वा रामदासं मुमुचतुः। यदा रामदासः बहिरागत्यापश्यत् तौ कुत्रापि न स्तः। कौ मम मोक्तारौ इति जिज्ञासया रामदासः तानाशाहं एव द्रष्टुं प्रस्थितः। तत्र प्राप्य तं तानाशाहं अपि चिन्तामग्नं प्राप, यतः तौ बहून् रक्षकान् अतीत्य अन्तःपुरं कथं प्रापतुः इति सः अवगन्तुं न शशाक। रामदासं दृष्ट्वा सः तद्रात्रिगताम् घटनां जगाद। तत् श्रुत्वा रामदासः तौ रामलक्ष्मणौ एव इति अवागच्छत्। एतौ अभक्ताय तानाशाहाय दर्शनं ददतुः परं मां उपेक्षितवन्तौ इति दुःखसागरे मग्नः रामदासः। मां रक्षितुं आगतौ विचिन्त्य भावसागरे च मग्नः।

तानाशाहः अपि ताभ्यां दत्तानि नाणकानि अपश्यत्। तानि राममुद्राङ्कितानि इति दृष्ट्वा रामलक्ष्मणयोः अस्तित्वं अनुभूतवान्। चकितः तदाप्रभृति सः रामभक्तः बभूव। रामलक्ष्मणाभ्याम् दत्तानि च नाणकानि सः भद्राचले

राममन्दिराय ददौ । अद्यापि द्वे नाणके तस्मिन्मन्दिरे विद्येते । प्रतिसंवत्सरं सः रामनवमीमहोत्सवाय महुमूल्यानि अयनानि प्रेषयति स्म । अद्यावधि तादृशीं सेवां भारतशासनं करोति ।



रामदासः तु रामदर्शनेन वञ्चितोऽहं इति तीव्रं दुःखं अन्वभवत् । एकदा तु प्राणत्यागनिश्चयमेवाकरोत् । रामचन्द्रः तस्य स्वप्ने आगत्य तमेवं जगाद पूर्वजन्मनि त्वं शुकमेकं द्वादशदिनानि यावत् पञ्जरे बद्धवान् । पञ्जरबद्धः सः शुकः वेदनामसहमानः रुरोद रामनाम च जजाप तस्य दुःखं तिरस्कुर्वन् त्वं तंशुकं अपश्यः । तस्य फलस्वरूपमेव एतत् वर्तते यत्त्वं द्वादशवर्षाणि कारागृहे आसीः, तानाशाहः च तव रामकीर्तनानि जहास इति । एवमुक्त्वा करुणासागरः रामचन्द्रः रामदासाय सीतालक्ष्मणाभ्यां सह दर्शनं ददौ । अस्य जन्मनः अवसाने मोक्षमवाप्स्यसीति वरमपि ददौ ।

तदनन्तरं रामदासः पुनः भद्राचलमेवागच्छत् । तत्र रामं सङ्कीर्तयन्मन्दिरकार्याणि निर्वहन् षष्टितमे वयसि मोक्षं प्राप । रामभक्तः सः स्वप्रियेण रामचन्द्रेण एक्यमाप । रामचन्द्रोऽपि स्वभक्तागमनेन सुप्रीतः एवेति संशयरहितमेव वृत्तम् ।

रामदासस्य कीर्तनानि प्रार्थना-कोप-प्रेम पावनकरणादि भावान् सुष्ठु निवेदयन्ति । तेषां कीर्तनानाम् गानेन श्रवणेन भक्ताः अद्यापि तादृश भावसमन्विताः सञ्जायन्ते । रामदासः अपि भद्राद्रौ रामसन्निधौ अद्यापि जीवति एव । रामचन्द्रभक्ताः तत्र भगवति भावभरिताः गच्छन्ति रामदासः अपूर्वानुभवं च लभन्ते ।। रामनवमीं अन्यान् उत्सवान् च तत्र भक्तियुक्ताः प्रतिवर्षं निर्वहन्ति भक्ताः ।

# तिरुक्कुरळ् (संस्कृतपद्यरूपानुवादः)

—श्रीकलियन् रामानुजजीयर् (भूतपूर्वः), नाङ्गुनेरि

## ७७. वाहिनी - वैभवम् - அதிகாரம் 77

படை மாட்சி.

உறுப்பு அமைந்து ஊறுஅஞ்சா வெல்படை வேந்தன்
வெறுக்கையுள் எல்லாம் தலை. 1

निजैश्चतुर्भिरप्यङ्गैरहीना वाहिनी भृशम्।
समरे हानिनिर्भीका राज्ञस्सम्पदनुत्तमा ॥

உலைவிடத்து ஊறுஅஞ்சா வன்கண் தொலைவிடத்துத்
தொல்படைக்க ல்லால் அரிது. 2

भूपस्यापत्तिसम्प्राप्तौ संख्ययाल्पमपि स्वयम् ।
अलं स्यान्निर्भयं योद्धुं नान्यन्मौलबलाद् भुवि ॥ २

ஒலித்தக்கால் என்னும் உவரி எலிப்பகை
நாகம் உயிர்ப்பக் கெடும்.

मूषकाणां महासैन्यं समुद्र इव घोषणाम्।
करोतु कामं कालाहेर्निश्वासेन प्रणश्यति ॥ ३

அழிவின்று அறைபோகாது ஆகி வழிவந்த
வன்க ணதுவே படை. 4

युद्धे क्षयमसम्प्राप्य भूत्वाऽजय्या च शत्रुभिः ।
पारम्परिकवीर्येण युक्ता स्याद्राजवाहिनी ॥ ४

கூற்றுஉடன்று மேல்வரினும் கூடி எதிர்நிற்கும்
ஆற்ற லதுவே படை. 5

आयातु कालदेवोऽपि भृशं क्रुद्धस्तथापि तम्।
एकीभूयाभियोद्धुं यच्छक्तं तत्सैन्यमामतम् ॥

மறம்மானம் மாண்ட வழிச்செலவுதேற்றம் 
எனநான்கே ஏமம் படைக்கு.

6

वीर्यं प्रकृत्या मानश्च पूर्ववीरमहापथे ।
गतिरव्याकुलत्वञ्च सैन्यक्षेमचतुष्टयम् ॥ ६

தார்தாங்கி செல்வது தானை தலைவந்த
போர்தாங்கும் தன்மை அறிந்து

7

पैराक्रान्तिकाले यत्संव्यूह्याऽऽलोच्य संगरे ।
अस्पृष्टं याति शत्रूणां सेनाधूल्या हि तद्बलम् ॥ ७

அடல்தகையும் தகையும் ஆற்றலும் இல்எனினும் தானை
படைத்தகையால் பாடு பெறும்.

8

अभियोद्धुमरीन् वीर्यशक्तिभ्यां हीनमप्यथ ।
सैन्यं स्वाकृतिभूम्ना हि प्रभवेत् गौरवास्पदम् ॥ ८

சிறுமையும் செல்லாத் துனியும் வறுமையும்
இல்லாயின வெல்லும் படை.

9

परिमाणाल्पता लोकजुगुप्स्याऽऽचरणं तथा ।
द्ररिद्रता च न स्युश्चेद्बलं शत्रूञ्जयेत् ध्रुवम् ॥ ९

நிலைமக்கள் சால உடைத்துஎனினும் தானை
தலைமக்கள் இல்வழி இல்.

10

सम्प्रतिष्ठितवीरैर्हि पूर्णं कामं भवत्वपि ।
नेतृभी रहितं स्याच्चेन्न स्थातुं प्रभवेच्चिरम् ॥ १०

क्षुत्तृष्णा काममात्सर्ये मरणाच्च महद्भयम् ।
पञ्चैतानि विवर्धन्ते वार्धक्ये विदुषामपि ॥

பசி, தாகம், ஆசை, பொறாமை மரண பயம்
ஐந்தும் முதுமையில் அறிவாளிக்கும் அதிகமாகும்.

Metres with 20 Syllables in quarter (कृति) (अनुवर्तते)

## (२) सुवदना

Def. ज्ञेया सप्ताश्वषड्भिर्मरभनययुता म्लौ गः सुवदना ।

Sch.G. म,र,भ,न,य,म,ल,ग *७.७.६)

Ex. उत्तुंगास्तुंगकूलं स्रुतमदसलिलाः प्रस्यन्दि सलिलं
श्यामाः श्यामोपकण्ठद्रुममतिमुखराः कल्लोलमुखरम् ।
स्रोतः खातावसीदत्तटमुरुदशनैरुत्सादिततटा;
शोणं सिंदूरशोणा मम गजपतयः पास्यंति शतशः ॥

Mu.4.16

-----*----

Metress with 21 Syllables in a quarter.

(प्रकृति.)

## (१) पञ्चककावली.

(Also called सरसी, धृतश्री.)

Def. नजभजजा जरौ नरपते कथिता भुवि पञ्चकावली ।

Sch.G. नन,ज,भ,ज,ज,ज,र (7.7.7.))

Ex. तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभूता ।
पपरिचलतो बालानुजबलस्य पुर; सततं धृतश्रिय-
श्चिरगलितश्रियो जलनिनधेश्च तदाऽभवदन्तरं महत् ॥

Si.3.82

## (२) स्रग्धरा.



Def. म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।

Sch.G. म,र,भ,न,य,य,य 3.7)

Ex. या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्याच होत्री ये
द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थि व्या विश्वम् ।
यामाहुः सर्वभूतप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥
S.1.1.

-----*-----

Metress wih 22 Syllables in a quarter

(आकृति).

## हंसी.

Def. मौ गौ नाश्चत्वारो गो गो वसुभुवनयतिरिति भवतिं हंसी

Sch.G. म,म, त, न, न, नन, त, ग (8.14)

Ex. सार्धं कान्तेनैकान्तेऽसौ विकचकमलमधु सुरभि पिबन्ती
कामक्रीडाकूततस्फीतप्रमदसरसतरमलधु रसन्ती ।
कालिन्दीये पद्मारण्ये पवनपतनपरितरलपरोगे
कंसाराते पाश्य स्वेच्छं सरमसगतिरिह विलसति हंसी ॥

—*—

Metres with 23 Syllables in a quarter.

(विकृति.)

## अद्रिततनया.

Def. नजभजभा जभौ लघुगुरू बुधैस्तु गदितेयमद्रितनया ।



Sch,. न,ज,भ,ज,भ,ज,भ,ल,ग (11.12)

Ex. खरतरशौर्यपावकशिखापतंगनिभमग्रदृप्तदनुजो
जलधिसुताविलासवसतिः सतां गतिररशेषमान्य महिमा।
भुवनहितावतारचचतुरश्चराचरधरोऽवतीर्ण इह हि
क्षितिवलयेऽस्ति कंसशमनस्तेवेति तमवोचचदद्रित-
मया ॥

—*—

Metres wigh 24 Ssyllables in quarter

(संस्कृति.)

तन्वी

Def. भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यपि भवति तन्वी

Sch.G. भ,त,न,स,भ,भ,न,य (5.7.11).

—*—

Metres wiith 25 Syllables in quarter

(अतिकृति)

क्रौंचपदा

Def. क्रौचपदा म्भौ स्भौ नननना ग्राविषुशरवसुमुनिविरतिरिह भवेत्

Sch.G. भ,म,स,भ,न,न,न,ग (5,5,8.7)

—*—

# रामाष्टपदी

(Sri P.R. Kannan, Mumbai)

सीतोदन्त-शुभाक्षरामृत-रसास्वादेन रामो मनः-
सन्ताप-ज्वर-हारिणा प्रमुदितः प्रेमोक्षितै-र्वीक्षितैः ।
पश्यन् वायुसुतं प्रशस्य बहु तं मध्ये हरीणां मुहुः
बाहुभ्यां परिरभ्य साश्रुनयनः पप्रच्छ सीतास्थितिम् ॥

With his grief removed by the nectarine sweet hearing of the auspicious account of Sita, Rama became happy and looked at Hanuman, the son of Vayu, with eyes, brimming with love and extolled him very much again and again in the midst of so many monkeys. He embraced Hanuman with his arms and enquired about Sita's condition with tear-filled eyes.

उद्याने दशकन्धरेण निहिता नक्तंचरी-वेष्टिता
किं ब्रूते मनुते च किं कथ-मसून् धत्ते प्रिया जानकी ।
ब्रूहि ब्रूहि कपे पुनः पुनरिति श्रीरामचन्द्रेरितः
सीतायै मनसा नतिं विरचय-न्नूचे तदीयां दशाम् ॥

Sri Ramachandra asked Hanuman: "Imprisoned in the garden by the ten-headed Ravana and surrounded by Rakshasis, what does the loving Janaki say; what is she thinking of; how does she retain her life-breath? O monkey, tell me, tell me again and again." Adoring Sita mentally, Hanuman spoke about her condition.

***In this seventeenth Ashtapadi, Hanuman's well-intentioned advice to Ravana in measured words to restore Sita to Rama honourably, describing Rama's unmatched prowess has been very nicely set forth by the poet. The poet mentions clearly that Siva or Brahma would not offer Ravana any succour, once he has made an enemy of Rama. Hanuman is suitably rewarded by Rama with embrace and kind words on his return from his momentous meeting with Sita.***

*******

## ॥ अष्टादशाष्टपदी॥

(स्तनविनिहित इतिवत्)

## ASHTAPADI 18

(Like in Stanavinihita)

बिलहरिरागेण]
[त्रिपुटतालेन गीयते

Raga Bilahari]
[Tala Triputa

अविरल-गलदश्रु वहति सा नयनम्।
मुञ्चति न कदापि भूतल-शयनम्॥

जानकी राम जानकी विरहे तव सीदति॥ (जानकी)

O Rama, Janaki is miserable in separation. Her eyes shed tears continuously; she never leaves lying down on earth.

शुक्ल-प्रतिप-च्चन्द्ररेखेन सुकृशा ।
कातरतया विरहे तव विवशा ॥ (जानकी)

Janaki is thin like the outline of moon on the 1st day (Prathama) of Sukla Paksha; in separation she is uncontrollably distressed.

भव-दुपगमनाय शोकविमूढा ।
अविरतमपि मनोरथ-मधिरूढा ॥ (जानकी)

Overcome by grief, she is perpetually wishful of your arrival.

मलिनांशुक-धूलि-धूसरदेहा ।
मुहुरपि हाहेति जात-विमोहा ॥ (जानकी)

Her attire is dusty; she bears a body, greyed due to dust; she wails frequently 'Ha, ha' and becomes unconscious.

दशमुख-विनाशाय जीवित-मार्या ।
वहति सा कुपिता-हिरिव भार्या ॥ (जानकी)

Janaki, your wife, like an angry snake, bears her life for destruction of the ten-headed Ravana.

उपवन-शकुनानामपि दयनीया ।

रोदिति शिंशपा-तल-शयनीया ॥ (जानकी)

Lying at the foot of the Simsupa tree, she weeps and is more pitiable than even the birds in the garden.

मूर्तिरिव सा करुणारस-धारा ।

शिव शिवानधिगत-शोकाब्धि-पारा ॥
(जानकी)

Janaki is as if the flow of the essence of pity incarnate. Siva, Siva, her ocean of grief has no shore.

श्रीरामकविवर-कृतमिति गीतम् ।

गायता-मनुदिनमपि सुप्रभातम् ॥
(जानकी)

May this song by the great poet Sri Ramakavi be sung every day in the morning.

श्लो ॥ राज्ञः कपीनां धृत-माज्ञयाऽथ समागतै-र्वानर-सैन्यपालैः ।
समावृतो दाशरथिः पयोधेः पौलस्त्य-नाशाय तटं प्रपेदे ॥

Slokas

Rama, the son of Dasaratha, arrived at the shore of the ocean for the destruction of Ravana, the grandson of sage Pulastya, surrounded by commanders of the monkey army, who had gathered on the orders of the monkey king Sugriva.

# ग्रन्थलिपिपरिज्ञानम् (अनुवर्तते)

**(अधोदृष्टं नागरलिपिमयं भागं ग्रन्थलिपिमयं कुरुत । ततः तमेव तोलयत ४२ पुटे दृयमान - शुद्धग्रन्थलिपिमयेनाशेन ।**

ஐயஂ கா? ஐயஂ ஸரஸ்வதீ । ஐயஂ வாக்தேவதா ।

**इयं का? इयं सरस्वती । इयं वाग्देवता ।**

---

ஐயஂ கஸ்யஸ்யா: பத்நீ ? ॥ ஐயஂ யாதுः பத்நீ ।

**इयं कस्यस्याः पत्नी? ॥ इं धातुः पत्नी ।**

---

அஸ்யா: ஭ர்தா கிஂ கரோதி? அஸ்யா ஭ர்தா

லோகாந் ஸ்ருஜதி ।

**अस्याः भर्ता किं करोति? अस्या भर्ता लोकान् सृजति ।**

---

அஸ்யா: கதி ஹஸ்தா: ஸந்தி । அஸ்யா: சத்வார:

ஹஸ்தா: ஸந்தி ।

**अस्याः कति हस्ताः सन्ति? । अस्याः चत्वारः हस्ताः सन्ति ।**

---

ஐயஂ சதுர்஭ி: ஹஸ்தை: கிஂ கிஂ யாரயதி ।

**इयं चतुर्भिः हस्तैः किं किं धारयति ? ।**

---

ஐயஂ வாமேந ஹஸ்தேந ஶாலாஂ, அபரேண

ஹஸ்தேந ம்ருதஂ, ஐதராஸ்யாஂ வீணாஂ ச

யாரயதி ।



**इयं एकेन हस्तेन मालां, अपरेण हस्तेन ग्रन्थं, इतराभ्यां वीणां च धारयति ।**

---

அஸ்யா: ஆகார: கீத்ருஶ: வர்ததே?

அஸ்யா ஆகார: ஸௌம்யோ வர்ததே ।

**अस्याः आकारः कीदृशः वर्तते? अस्या आकारः सौम्यो वर्तते ।**

---

இயம் கஸ்மின் உபவிஶதி? இயம் ஶ்வேதபத்மாஸநே உபவிஶதி ।

**इयं कस्मिन् उपविशति ? इयं श्वेतपद्मासने उपविशति ।**

---

அஸ்யா: ஸமீபே ஏகா மயூரீ திஷ்ட²தி ।

**अस्याः समीपे एका मयूरी तिष्ठति ।**

---

வித்³யார்தி²ந: ஸரஸ்வதீம் கிமர்த²ம் ப்ரார்த²யந்தே?

**विद्यार्थिनः सरस्वतीं किमर्थं प्रार्थयन्ते?**

---

பா³லா: ஜாட்³ய பரிஹரணார்த²ம்

வாக்படுத்வப்ராப்தயே ச ஏநாம் ப்ரார்த²யந்தே?

**बालाः जाड्य परिहरणार्थं वाक्पटुत्वप्राप्तये च एनां प्रार्थयन्ते**

---

வயமபி அது⁴நா ஏநாம் ப்ரார்த²யாம: ।

**वयमपि अधुना एनां प्रार्थयामः ।**

## ஸம்ஸ்க்ருதத்தை எளிதில் கற்க எமது பாட நூல்கள்

ஸம்ஸ்க்ருதஸ்ரீ பாடமாலா -
1—7 பாகங்கள் ஒவ்வொன்றும்
ஸம்ஸ்க்ருதஸ்ரீ அகராதி
(Dictionary Sanskrit & Tamil)
தமிழ் - ஆங்கிலப் பொருளுடன்
தாதுமாலா (300 தாதுக்கள்) முதல்பாகம்
சப்தமஞ்ஜரீ, அவ்யயகோசம்
க்ருதந்தரூபமாலா (Vo1. 1 to 5)
பாடமாலா ஆங்கிலம் 1 & 2
ஸம்ஸ்க்தஸ்ரீ மாதப் பத்திரிகை ஆண்டு சந்தா
ஆயுள் சந்தா ரூ. 400/-
புத்தகம் அனுப்ப தபால் செலவு தனி
விவரமறிந்து பணம் அனுப்பவும், விலை மாறுதலுக்கு உட்பட்டது.

**பாட புத்தகங்கள் கிடைக்குமிடம் :**

1. ஸௌஸைடி கார்யாலம். 212/13-1 St, Marry's Road, Mandiaveli, Chennai-28
2. M/s. விஜயா ஸ்டோர்ஸ், மயிலாப்பூர், 24954932
3 M/s. ஸ்ரீ மார்க்கண்டேயர் புக் கேலரி, கும்பேஸ்வரர் ஸந்நிதி, கும்பகோணம் . Ph: 2420750
4. M/s. அக்ஸ்த்யர் புக் டெப்போ, தெப்பக்குளA ம், திருச்சி-2 தொலைபேசி : 2700061.
5. M/s. அருள் நந்தி சிவம் புத்தக நிலையம், ஜங்க்ஷன்,, திருநெல்வேலி-627001.
6. ஜயலக்ஷ்மீ இண்டோலோஜிகல் புக் ஹௌஸ், 6, அப்பர் ஸ்வாமி கோவில் தெரு, மைலாப்பூர், சென்னை-4 Phone : 24990539.
6. பவானி புக்ஸெண்டர், 19, ஸ்டேஷன் ரோடு, மேற்கு மாம்பலம், சென்னை-33 Ph: 24748124